[ २५ ]

# अजितनाथस्य विरहश्रवणे सगरनृपस्य वचनम् ।

ततः सगरमाहूय, जगाद त्रिजगद्गुरुः ।
गृह्यतां राज्यभारो नः, संसाराब्धिंतितीर्षताम् ॥ १४२ ॥
इत्युक्तोऽजितनाथेन, श्यामास्योऽश्रूणि पातयन् ।
एकैकबिन्दुवर्षीव, वारिदः सगरोऽब्रवीत् ॥ १४३ ॥
अभक्तिं किं मया देव !, विदधे देवपादयोः ? ।
आत्मनो मां पृथक्कर्तुमद्य येनैवमादिशः ॥ १४४ ॥
अभक्तिर्वास्तु विहिता, नाप्रसादाय सापि हि ।
पूज्यैरभक्तोऽपि शिशुः, शिष्यते न तु हीयते ॥ १४५ ॥
किं नामाभ्रंलिहेनापि, छायाहीनेन शाखिना ? ।
किंवा समुन्नतेनापि, वृष्टिहीनेन वार्मुचा ? ॥ १४६ ॥
किं वा निर्झरहीनेन, तुङ्गेनापि महीभृता ? ।
किं वा लावण्यहीनेन, सुरूपेणापि वर्ष्मणा ? ॥ १४७ ॥
किं वा गन्धविहीनेन, पुष्पेणापि विकासिना ? ।
अनेन त्वद्विहीनेन, राज्येनापि हि किं मम ? ॥ १४८ ॥
॥ त्रिभिर्विशेषकम् ॥

निर्ममस्य निरीहस्य, मुमुक्षोरपि ते सत. ।
प्रभो ! पादौ न मोक्ष्यामि, का राज्यादानसंकथा ? ॥ १४९ ॥

---

१ मेघेन । २ शरीरेण ।

राज्यं पुत्राः कलत्राणि, मित्राण्यथ परिच्छदः ।
तृणवत्सुत्यजं सर्वं, त्वत्पादौ दुस्त्यजौ तु मे ॥ १५० ॥
राजीभवति नाथाहं, युवराज्यभवं यथा ।
त्वयि व्रतधरे शिष्यीभविष्याम्यधुना तथा ॥ १५१ ॥
गुरुपादाम्बुजोपास्तितत्परस्य दिवानिशम् ।
[1]शैक्षस्य भैक्षमपि हि, साम्राज्यादतिरिच्यते ॥ १५२ ॥
भवं तरिष्याम्यज्ञोऽपि, भवत्पादावलंब्यहम् ।
गोपुच्छलग्नो हि तरेन्नदीं गोपालबालकः ॥ १५३ ॥
दीक्षां सह त्वयादास्ये, विहरिष्ये सह त्वया ।
दुःसहांश्च सहिष्येऽहं त्वया सह परीषहान् ॥ १५४ ॥
त्वया सहोपसर्गांश्च, सहिष्ये त्रिजगद्गुरो ! ।
कथंचिदपि न स्थास्याम्यहमत्र प्रसीद मे ॥ १५५ ॥

त्रिषष्टि० प० २, स० ३, पृ० ३८ ।

---

१ शिष्यस्य ।

[ २६ ]

## श्री नेमिकुमारं व्यावृत्तं दृष्ट्वा राजीमत्या विलापः ।

व्यावृत्तं नेमिनं दृष्ट्वा श्रुत्वा च व्रतकांक्षिणम् ।
राजीमत्यपतत् पृथ्व्यां वल्लीवाकृष्टपादपा ॥ २१० ॥
तां सख्यः सिषिचुर्भीताः शीतांभोभिः सुगंधिभिः ।
अवीजयन् व्यजनैश्च कदलीदलनिर्मितैः ॥ २११ ॥
अवाप्तसंज्ञा चोत्थाय कपोललुलितालका ।
अश्रुधारातिम्यमानकञ्चुका[1] विललाप सा ॥ २१२ ॥
नासीन्मनोरथोऽप्येष यन्नेमिः स्याद्वरो मम ।
केनास्यभ्यर्थितो दैव ! यन्नेमिर्मे वरः कृतः ? ॥ २१३ ॥
विपरीतं कुतोऽकार्षीरकाण्डे दण्डपातवत् ? ।
एकस्त्वमसि मायावी त्वं च विश्वासघातकः ॥ २१४ ॥
यद्येवं प्रागपि ज्ञानं स्वमाप्स्यत्ययान्मया ।
क्वायं जगत्त्रयोत्कृष्टो वरो नेमिरहं क्व च ? ॥ २१५ ॥
आत्मनोऽननुरूपाहं ज्ञाता नेमे ! त्वया यदि ।
तत्प्रपद्य विवाहं मे जनितः किं मनोरथः ? ॥ २१६ ॥
जनयित्वा च किं भग्नः स्वामिन्मम मनोरथः ? ।
महतां प्रतिपन्नं हि यावज्जीवमपि स्थिरम् ॥ २१७ ॥

१ अश्रुधाराभिरार्द्रीक्रियमाणकञ्चुका ।

प्रतिपन्नाद्भवन्तोऽपि चलन्ति यदि तत्प्रभो ! ।
मर्यादा लङ्घयिष्यन्ति निश्चितं जलराशय: ॥ २१८ ॥
यद्वा तवापि नो दोषो दोषो मत्कर्मणामयम् ।
भवत्पाणिगृहीतात्वं वचसैव यदासदम् ॥ २१९ ॥
चारू मातृगृहं दिव्यमण्डपो रत्नवेदिका ।
विवाहायावयोरन्यदप्येतदभवन्मुधा ॥ २२० ॥
धवलैर्गीयते यत्तन्न सर्वं सत्यमीदृशी ।
सत्योक्तिस्त्वं हि मे भर्ता गीतोऽस्यादौ न चाभव: ॥ २२१ ॥
किं युग्मिनां विघटनमकार्षं पूर्वजन्मनि ? ।
पाणिस्पर्शसुखमपि यत्पत्युर्नाहमाप्नवम् ॥ २२२ ॥
विलपन्तीति सा जघ्ने हस्ताब्जाभ्यामुर:स्थलम् ।
हारं च त्रोटयामास स्फोटयामास कङ्कणे ॥ २२३ ॥

—त्रिषष्टि० प० ८, स० ९, पृ० १३७ ।

---

१ दम्पतीनाम् ।

[२७]

## वृषभप्रभोर्निर्वाणे भरतस्य क्रन्दनम् ।

स्वामिनिर्वाणकल्याणान्निर्वाणो दुःखपावकः ।
अदृष्टसुखलेशानां, नारकाणामपि क्षणम् ॥ ४९३ ॥
महाशोकसमाक्रान्तश्चक्रवर्ती तु तत्क्षणम् ।
पपात मूर्च्छितः पृथ्व्यां, वज्राहत इवाऽचलः ॥ ४९४ ॥
महत्यप्यागते दुःखे, दुःखशैथिल्यकारणम् ।
विदांचकार रुदितं, न कश्चिदपि यत् तदा ॥ ४९५ ॥
दुःखशैथिल्यहेतुं तच्चक्रिणोऽज्ञापयत् स्वयम् ।
शक्रश्चकार रुदितं, महापूत्कारपूर्वकम् ॥ ४९६ ॥
अनु संक्रंदनं चक्रे, क्रन्दनं त्रिदशैरपि ।
समा हि समदुःखानां, चेष्टा भवति देहिनाम् ॥ ४९७ ॥
तेषां च रुदितं श्रुत्वा, संज्ञामासाद्य चक्र्यपि ।
उच्चैःस्वरेण चक्रन्द, ब्रह्माण्डं स्फोटयन्निव ॥ ४९८ ॥
रुदितेनाऽस्फुटद् राज्ञः, शोकग्रन्थिर्महानपि ।
पालीबंधो महास्रोतोरंहसेव महीयसा ॥ ४९९ ॥
सुरासुरमनुष्याणां, रुदितै रुदितैस्ततः ।
त्रैलोक्ये करुणरस, एकच्छत्र इवाऽभवत् ॥ ५०० ॥

१ महाप्रवाहवेगेन ।

ततः प्रभृति लोकेऽपि, देहिनां शोकसम्भवे ।
[1]रोदनाध्वा प्रववृते, शोकशल्यविशल्यकः ॥ ५०१ ॥
नैसर्गिकमपि त्यक्त्वा, धैर्यं भरतभूपतिः ।
दुःखितो विललापैवं, तिरश्चोऽपि हि दुःखयन् ॥ ५०२ ॥
हा तात ! हा जगद्बन्धो !, हा कृपारससागर ! ।
अज्ञानिह भवारण्ये, त्यक्तवानसि नः कथम् ? ॥ ५०३ ॥
अम्लानकेवलज्ञानप्रकाशेन विना त्वया ।
तमसीव [2]ऋते दीपं, स्थास्यामोऽत्र कथं भवे ? ॥ ५०४ ॥
छद्मस्थस्येव ते मौनं, किमेतत् परमेश्वर ! ? ।
कुरुष्व देशनां नाऽनुगृह्णासि किममुं जनम् ? ॥ ५०५ ॥
लोकाग्रमथवाऽयासीर्भगवन् ! भाषसे न यत् ।
आभाषन्ते दुःखितं मां, तेऽपि मद्बन्धवो न किम् ? ॥ ५०६ ॥
हुं ज्ञातमथवा ते हि, सदा स्वाम्यनुगामिनः ।
स्वामिनोऽननुगो नास्ति, मत्कुले मां विनाऽपरः ॥ ५०७ ॥

—त्रिषष्टि० प० १, स० ६, पृ० १६६ ।

---

१ रोदनमार्गः । २ विना ।

[ २८ ]

# अरण्ये सीतायास्त्यागे सेनानेः कारुण्यं तस्याश्च विलापः।

गंगासागरमुत्तीर्यारण्ये सिंहनिनादके ।
गत्वा कृतान्तवदनस्तस्थौ किञ्चिद्विचिन्तयन् ॥ ३०९ ॥
साश्रु म्लानमुखं तं च प्रेक्ष्य सीताब्रवीदिति ।
कथमित्थं स्थितोऽसि त्वं सशोक इव दुर्मनाः ? ॥ ३१० ॥
कृतान्तः कथमप्यूचे दुर्वचं वच्म्यहं कथम् ? ।
दुष्करं कृतवांश्चैतत् प्रेष्यभावेन दूषितः ॥ ३११ ॥
राक्षसावाससंवासापवादाल्लोकजन्मनः ।
भीतेन देवि ! रामेण त्याजितासि वनेऽनघे॥ ३१२ ॥
अपवादे चराख्याते रामं त्वत्त्यजनोद्यतम् ।
न्यषेधीलक्ष्मणो लोकं प्रति क्रोधारुणेक्षणः ॥ ३१३ ॥
सिद्धाज्ञया निषिद्धश्च रामेण स रुदन् ययौ ।
अहं च प्रेषितोऽमुष्मिन् कार्ये पापोऽस्मि देवि ! हा ॥ ३१४ ॥
अमुष्मिञ्छ्वापदाकीर्णे मृत्योरेकनिकेतने ।
जीविष्यसि मया त्यक्ता स्वप्रभावेण केवलम् ॥ ३१५ ॥
तच्छ्रुत्वा स्यन्दनात् सीता मूर्छिता न्यपतद्भुवि ।
मृतेति बुद्ध्या सेनानीः पापंमन्यो रुरोद सः ॥ ३१६ ॥
सीतापि वनवातेन कथञ्चित् प्राप चेतनाम् ।
भूयो भूयोऽप्यमूर्च्छच्च चेतनामाससाद च ॥ ३१७ ॥

महत्यामथ वेलायां सुस्थीभूयेत्युवाच सा ।
इतोऽयोध्या कियद्दूरे रामस्तिष्ठति कुत्र वा ? ॥ ३१८ ॥
सेनानीरभ्यधाद्दूरेऽयोध्या किं पृच्छयानया ? ।
उग्राज्ञस्य च रामस्य पर्याप्तं देवि ! वार्तया ॥ ३१९ ॥
इति श्रुत्वापि सा रामभक्ता भूयोऽप्यभाषत ।
भद्र ! मद्वाचिकमिदं[1] शंसे रामस्य सर्वथा ॥ ३२० ॥
यदि निर्वादभीतस्त्वं परीक्षां नाकृथाः कथम् ? ।
शंकास्थाने हि सर्वोऽपि [2]दिव्यादि लभते जनः ॥ ३२१ ॥
अनुभोक्ष्ये स्वकर्माणि मन्दभाग्या वनेऽप्यहम् ।
नानुरूपं त्वकार्षीस्त्वं विवेकस्य कुलस्य च ॥ ३२२ ॥
यथा खलगिरात्याक्षीः स्वामिन्नेकपदेऽपि माम् ।
तथा मिथ्यादृशां वाचा मा धर्मं जिनभाषितम् ॥ ३२३ ॥
इत्युक्त्वा मूर्छिता भूमौ पतितोत्थाय चाभ्यधात् ।
मया विना कथं रामो जीविष्यति हतास्मि हा ? ॥ ३२४ ॥
रामाय स्वस्त्यथाशंसेराशिषं लक्ष्मणस्य च ।
शिवास्ते सन्तु पन्थानो वत्स ! गच्छोपराघवम् ॥ ३२५ ॥

—त्रिषष्टि० प० ७, स० ८, पृ० ११३ ।

---

१ मत्सन्देशम् । २ पंचदिव्यानां मध्ये किमपि दिव्यं करोति येन सत्यासत्ये परीक्ष्येते इतिभावः ।

## [ २९ ]

## दयावीरश्रीनेमिनाथस्याग्रे ।

## पशूनां शिवादेवीप्रमुखपरिवाराणां चाक्रन्दनम् ।

ततो **नेमिर्**दयावीरो बभाषे निजसारथिम् ।
यत्रैते प्राणिनः सन्ति स्यन्दनं नय तत्र मे ॥ १७५ ॥
तथैव सारथिश्चक्रे ददर्श भगवानपि ।
विविधान् प्राणिनः प्राणापहारचकितात्मनः ॥ १७६ ॥
ग्रीवायां रज्जुभिर्बद्धाः केऽपि केऽपि च पादयोः ।
केऽपि क्षिप्ताः पञ्जरान्तः केऽपि पाशेषु पातिताः ॥ १७७ ॥
उन्मुखा दीननयना वेपमानशरीरकाः ।
ते प्रेक्षांचक्रिरे **नेमिं** प्रीणकं दर्शनादपि ॥ १७८ ॥
पाहि पाहीति ते **नेमिं** स्वस्वभाषाभिरब्रुवन् ।
तांश्च साराथिमाज्ञाप्य **नेमिनाथो**ऽप्यमोचयत् ॥ १७९ ॥
स्वं स्वं स्थानं ततस्तेषु गतेषु प्राणिषु प्रभुः ।
रथं निवर्तयामास पुनर्निजगृहं प्रति ॥ १८० ॥
**शिवा समुद्रविजयः कृष्णो रामो**ऽपरेऽपि हि ।
विहाय स्वस्वयानानि **नेमिनः** पुरतोऽभवन् ॥ १८१ ॥
**शिवासमुद्रविजया**वूचाते साश्रुलोचनौ ।
कस्मादकस्मादप्यस्माद् विनिवृत्तस्त्वमुत्सवात् ॥ १८२ ॥
**नेमिर**प्यब्रवीदेते प्राणिनो बन्धनैर्यथा ।
बद्धास्तथा वयमपि तिष्ठामः कर्मबन्धनैः ॥ १८३ ॥

यथैषां बन्धनान्मोक्षः कर्मबन्धात्तथात्मनः ।
कर्तुं दीक्षामुपादास्ये सौख्याद्वैतनिबन्धनाम् ॥ १८४ ॥
तन्नेमिवचनं श्रुत्वा तौ द्वावपि मुमूर्छतुः ।
रुरुदुर्यदवः सर्वेऽप्यनुद्धतविलोचनाः ॥ १८५ ॥
शिवासमुद्रविजयौ समाश्वास्य जनार्दनः ।
रुदितं च प्रतिषिध्य बभाषेऽरिष्टनेमिनम् ॥ १८६ ॥
मम रामस्य तातानां सदा मान्योऽसि मानद ! ।
रूपं निरुपमं चेदं यौवनं च नवं तव ॥ १८७ ॥
किं च सापि स्नुषा राजीमती राजीवलोचना ।
तवानुरूपा तद् ब्रूहि किं ते वैराग्यकारणम् ? ॥ १८८ ॥
ये चैते पशवो दृष्टा स्त्वया तेऽपि हि मोचिताः ।
पितॄणां बान्धवानां च तत्पूरय मनोरथम् ॥ १८९ ॥
पितरौ शोकनिर्मग्नौ न ह्युपेक्षितुमर्हसि ।
तत्रापि हि कुरु भ्रातः सर्वसाधारणीं कृपाम् ॥ १९० ॥
प्रीणिताः प्राणिनो दीना यथैते भवता तथा ।
भ्रातॄन् प्रीणय रामादीनपि स्वोद्वाहदर्शनात् ॥ १९१ ॥

—त्रिषष्टि० प० ८, स० ९, पृ० १३६ ।

---

१ मन्दलोचनाः ।

[ ३० ]

## सगरचक्रिणोऽग्रे द्विजस्य कृत्रिमविलापः।

इत्यादिभिर्दुर्निमित्तैर्विद्धो हृदि शरैरिव ।
विमनाः प्राविशमहं चञ्चापुरुषवद्गृहम् ॥ ९८ ॥
मामापतन्तं सम्प्रेक्ष्य, ब्राह्मणी [1]विलुलत्कचा ।
सद्यो हा पुत्र ! हा पुत्रेत्याक्रन्दन्त्यपतद्भुवि ॥ ९९ ॥
ध्रुवं विपन्नो मे पुत्र, इति निश्चित्य चेतसा ।
अहमप्यपतं सद्यो, गतप्राण इवावनौ ॥ १०० ॥
मूर्छाविरामे भूयोऽपि, प्रलपन् करुणस्वरम् ।
अपश्यं गृहमध्येऽहं, सर्पदष्टमिमं सुतम् ॥ १०१ ॥
भोजनाद्यप्यकृत्वास्थां, यावज्जाग्रदहं निशि ।
कुलदेवतया तावदिदमादेशि मे पुनः ॥ १०२ ॥
भोः किमेवं समुद्विग्नोऽस्यमुना पुत्रमृत्युना ? ॥
[2]संपादयामि ते पुत्रं, यद्यादेशं करोषि मे ॥ १०३ ॥
देव्याः प्रमाणमादेश, इत्यवोचमहं ततः ।
पुत्रार्थे शोकविधुरैः, किं वा न प्रतिपद्यते ॥ १०४ ॥
कुलदेवतयाथोक्तं, [3]विपन्नो यत्र कोऽपि न ।
ततोऽग्निं मङ्गलगृहात्, कुतोऽप्यानय सत्वरम् ॥ १०५ ॥
ततस्तनयलोभेन, प्रत्यहं प्रतिमन्दिरम् ।
तत्पृच्छन् हस्यमानोऽहं, भ्रान्तोऽर्भक इवाभ्रमम् ॥ १०६ ॥

---

१ विकीर्णकेशाः। २ जीवयामि। ३ मृतः।

पृच्छ्यमानो जनः सर्वोऽप्याचष्टे स्म गृहे गृहे ।
संख्यातीतान् मृतान् वेश्म, नामृतं किञ्चिदप्यभूत् ॥१०७॥
तदप्राप्त्या च भग्नाशः, परासुरिव[1] नष्टधीः ।
व्यजिज्ञपमहं दीनस्तत्सर्वं कुलदेवताम् ॥ १०८ ॥
आदिशद्देवताप्येवं, न मङ्गलगृहं यदि ।
अमङ्गलं कथमहं, तव रक्षितुमीश्वरी[2] ॥ १०९ ॥
तया च देवतावाचा, तोत्रेणेव[3] प्रवर्तितः ।
प्रतिग्रामं प्रतिपुरिं, भ्रमन्नहमिहागमम् ॥ ११० ॥
अपि धात्र्याः समस्तायास्त्राता त्वमसि विश्रुतः[4] ।
न कोऽपि प्रतिमल्लोऽपि, दोष्मदग्रेसरस्य ते ॥ १११ ॥
वैताढ्यगिरिदुर्गस्थश्रेणिद्वयगतास्तव ।
विद्याधरा अपि दधत्याज्ञां शिरसि माल्यवत् ॥ ११२ ॥
देवा अपि तवादेशं, सदा कुर्वंति भृत्यवत् ।
वांछितार्थं प्रयच्छन्ति, निधयश्च तवानिशम् ॥ ११३ ॥
ततस्त्वां शरणं प्राप्तो, दीनत्राणैकसत्रिणम्[5] ।
तदग्निं मंगलगृहात्, कुतोऽप्यानय मत्कृते ॥ ११४ ॥
विपन्नमपि मे पुत्रं, सा यथा कुलदेवता ।
प्रत्यानयति येनाग्निं, दुःखितः पुत्रमृत्युना ॥ ११५ ॥

—त्रिषष्टि० प० २, स० ६, पृ० ८९ ।

---

१ गतप्राण इव । २ समर्था । ३ वेणुदण्डेनेव । ४ प्रसिद्धः ।
५ दीनरक्षणे निश्चितदीक्षितम् ।

[ ३१ ]

## पितुर्मृत्युसमये विष्णोस्तन्मातुश्चरोदनम् ।

तत्र च प्रविशन् विष्णुर्जननीद्वाःस्थयैकया ।
अग्रे भूत्वा सकरुणं व्यज्ञपीदमुदश्रिया ॥ १११ ॥

कुमार ! परित्रायस्व परित्रायस्व नन्वसौ ।
जीवत्यपि महाराजे देवीदं दुर्व्यवस्यति ॥ ११२ ॥

तदाकर्ण्य वचो विष्णुः संभ्रान्तो मातुरालयम् ।
जगाम वीक्षाञ्चक्रे च मातरं ब्रुवतीमिति ॥ ११३ ॥

पतिप्रसादादुद्भूता ये प्राज्या रत्नराशयः ।
अनन्तं काञ्चनं यच्च ये वा रजतसञ्चयाः ॥ ११४ ॥

मुक्तामया वज्रमया जात्यरत्नमयाश्च ये ।
संमिश्रा ये च नेपथ्यसमुदायाः सहस्रशः ॥ ११५ ॥

यच्चान्यत् कोशसर्वस्वं सप्तक्षेत्र्यां तदर्प्यताम् ।
महापथप्रस्थितानां पाथेयं हीदमादिमम् ॥ ११६ ॥

पत्युर्विपत्तौ वैधव्यसहास्मि न मनागपि ।
अहं तदग्रे यास्यामीत्यनलः सज्ज्यतां द्रुतम् ॥ ११७ ॥

इति ब्रुवाणां जननीं जननीं दुःखसम्पदः ।
उपेत्य नत्वा च हरिर्व्याहरद्गद्गदाक्षरम् ॥ ११८ ॥

---

१ अनुचितं व्यवस्यति । २ मृत्युमार्गप्रस्थितानाम् । ३ विनाशे । ४ जनयित्रीम् ।

मातर्मातस्त्वमपि मां मन्दभाग्यं किमुज्झसि ।
अहो विरुद्धं मे दैवं देव्यैवं यत् प्रचक्रमे ॥ ११९ ॥

अम्मादेव्यप्युवाचैवं तज्ज्ञैः सम्यक् परीक्षितः ।
त्वत्तातस्योपस्थितोऽयं रोगः प्राणहरो हरे ! ॥ १२० ॥

नालं क्षणमपि श्रोतुं विधवेत्यक्षराण्यहम् ।
कौसुंभधारिणी यास्याम्यग्रतस्त्वत्पितुस्ततः ॥ १२१ ॥

कृतार्थं मेऽभवज्जन्म पत्या शिवमहीभुजा ।
पुत्र ! त्वया च पुत्रेण पञ्चमेनार्धचक्रिणा ॥ १२२ ॥

पत्युर्विपत्तौ यास्यन्ति मत्प्राणाः स्वयमेव हि ।
त्यक्ष्यामि तान् प्रविश्याग्नौ मा भून्मे हीनसत्वता ॥ १२३ ॥

तत्क्षत्रियकुलाचारमाचरन्त्या ममाधुना ।
मा स्म भूरन्तरायस्त्वं वत्स ! वात्सल्यतोऽपि हि ॥ १२४ ॥

समं 'सुदर्शनेन' त्वं पुत्र ! नंद मदाशिषा ।
प्रत्युरग्रे प्रयाम्येषा कृष्णवर्त्मैकवर्त्मना ॥ १२५ ॥

अन्तिमां प्रार्थनां तेऽद्य कुमारेनां करोम्यहम् ।
निषेधकं [3]विधेरस्य त्वया वाच्यं न किञ्चन ॥ १२६ ॥

एव मुक्त्वा तु सा स्वामिविपच्छ्रवणकातरा ।
परलोकपुरद्वारं प्रवेष्टुमनलं ययौ ॥ १२७ ॥

दुःखानुबन्धिभिर्दुःखैः श्लथाङ्गो [4]वीवधैरिव ।
समेऽपि प्रस्खलत्पादः पितुः पार्श्वं ययौ हरिः ॥ १२८ ॥

---

१ वेद्यैरित्यर्थः । २ अग्निमार्गेण । ३ मरणविधेः । ४ भारैरिव ।
५ समप्रदेशेऽपि ।

स्मरन् स्वां मातरं पश्यंस्तथा पितरमातुरम् ।
²प्रतीकारासहो विष्णुः क्लीबमान्यपतद्भुवि ॥ १२९ ॥
राजा दाहज्वरार्तोऽपि बभाषे धैर्यमाश्रयन् ।
किमेतद्वत्स ! कौतर्यं स्वकुलानुचितं तव ॥ १३० ॥
इयं हि त्वद्भुजाधारा वत्स ! देवी वसुन्धरा ।
अधैर्याल्लिपतन्नस्यां कथं नाम न लज्जसे ॥ १३१ ॥
त्वय्युच्चैः पुरुषसिंह इत्याख्याकारिणो मम ।
अज्ञानकारितां मा दास्त्वमेवं धैर्यमुत्सृजन् ॥ १३२ ॥
एवं शार्ङ्गिणमाश्वास्य शिवराजः शिवाशयः ।
कालधर्मं ययो सायं कः कालं यातुमीश्वरः ? ॥१३३॥
श्रुत्वा च मूर्च्छितो विष्णुः पपात धरणीतले ।
महाद्रुमो वात्ययेव वातेनेव च वातकी ॥ १३४ ॥
अथ सिक्तः पयस्कुम्भैर्लब्धसंज्ञो जनार्दनः ।
हा तात ! तात ! तातेति क्रन्दन्नुत्तिष्ठति स्म च ॥ १३५ ॥
न किं सन्तप्यते तेऽङ्गं गुणः कस्यौषधस्य वा ।
प्रत्यय कस्य वैद्यस्य सुखनिद्राथवाद्य किम् ॥ १३६॥
ब्रूहि तात ! प्रसादं मे कृत्वेति स्नेहमोहितः ।
प्रललाप क्षणं विष्णुर्विललाप च तत्क्षणम् । १३७ ॥

— त्रिषष्टि० प० ४, स० ५, पृ० ७३ ।

१ रोगग्रस्तम् । २ रोगापायेऽसमर्थः । ३ भीरुत्वम् । ४ वातसमूहेन झंझावातेन वा । ५ वातरोगी पुमान् ।

[ ३२ ]

## दवदन्तीत्यागसमये नलस्य शोकः प्रियविरहे च दवदन्त्या विलापः ।

दवदन्त्येकवस्त्रेयमेका स्वपिति वर्त्मनि ।
अहो नलस्य शुद्धान्तमसूर्यंपश्यमीदृशम् ॥ ५२९ ॥

अहो मत्कर्मदोषेण कुलीनेयं सुलोचना ।
प्रविवेश दशामेवं हताशः किं करोम्यहम् ? ॥ ५३० ॥

मयि सत्यपि पार्श्वस्थेऽप्युन्मत्तवदनाथवत् ।
भूमौ शेते वरारोहा जीवत्यद्यापि ही नलः ॥ ५३१ ॥

मयैकाकिन्यसौ मुक्ता प्रबुद्धा मुग्धलोचना ।
मोक्ष्यते जीवितेनापि स्पर्द्धयेव मया सह ॥ ५३२ ॥

भक्तां तदेनां वञ्चित्वा नान्यतो गंतुमुत्सहे ।
जीवितं मरणं वापि मम स्तादनया सह ॥ ५३३ ॥

अथवानेकदुःखानामरण्ये नरकोपमे ।
पात्रं नारकिक इव भवाम्येकोऽहमस्त्वसौ ॥ ५३४ ॥

मया तु वस्त्रे लिखितामाज्ञां कृत्वा मृगाक्ष्यसौ ।
स्वयं गत्वा कुशलिनी वत्स्यति [3]स्वजनौकसि ॥ ५३५ ॥

इति निश्चित्य तां रात्रिमतिक्रम्य च नैषधिः ।
प्रबोधसमये पत्न्यास्तिरोधात्त्वरितक्रमम् ॥ ५३६ ॥

---

१ अन्तःपुरम् । २ वरः श्रेष्ठ आरोहः शयनं यस्याः सा । ३ निजपितृगृहे ।

उन्निद्रपङ्कजामोदिमृदुप्रत्यूषमारुते ।
निशाशेषे दवदन्ती स्वप्नमेवमुदैक्षत ॥ ५३७ ॥
यदहं फलिते फुल्ले पत्रले चूतपादपे ।
आरुह्य तत्फलान्यादं शृण्वन्ती भृङ्गनिःस्वनान् ॥ ५३८ ॥
अकस्माद्वनकरिणोदमूलि च स पादपः ।
पतिताहं च मेदिन्यां ततोऽण्ड इव पक्षिणः ॥ ५३९ ॥
भैमी प्रबुद्धा तत्कालमपश्यंती नलं पुरः ।
दिशोऽवलोकयामास मृगी यूथादिव च्युता ॥ ५४० ॥
अचिंतयच्चापतितमंत्र्याहितमनाहतम् ।
अशरण्यामरण्ये मां प्रेयानपि मुमोच यत् ॥ ५४१ ॥
यद्वा मुखक्षालनाय प्राणेशो मे निशात्यये ।
गतो भविष्यति कापि वार्यानेतुं जलाशये ? ॥ ५४२ ॥
नीतो रमयितुं यद्वापरुध्य नियतं नलः ।
कयाचिदपि [3]खेचर्या [4]तद्रूपालोकलुब्धया ॥ ५४३ ॥
क्रीडन् कलायां कस्यांचिज्जितो मन्ये तया च सः ।
कृतावस्थानपणतस्तस्थौ चाद्यापि नैति यत् ॥ ५४४ ॥
ते द्रुमा पर्वतास्तेऽपि तदरण्यं च सा च भूः ।
एकमेव न पश्यामि नलं कमललोचनम् ॥ ५४५ ॥
एवं चिंताप्रपन्ना सा दर्शं दर्शं दिशोऽखिलाः ।
प्राणनाथमपश्यन्ती निजं स्वप्नं व्यचारयत् ॥ ५४६ ॥

१ विकसितम् । २ कष्टम् । ३ विद्याधर्या । ४ नलरूपदर्शनलुब्धया ।

सहकारो नलो राजा राज्यं पुष्पफलादिकम् ।
फलास्वादो राज्यसुखं भृङ्गाः परिजनो मम ॥ ५४७ ॥
[1]सहकारतरुर्यश्चोन्मूलितो वनदन्तिना ।
राज्यादुत्थाप्य दैवेन प्रावास्यत स मे पतिः ॥ ५४८ ॥
यच्चास्मि पतिता वृक्षात्तद्भ्रष्टास्मि नलादहम् ।
स्वप्नेनानेन नूनं मे नलो दुर्लभदर्शनः ॥ ५४९ ॥
॥ त्रिभिर्विशेषकम् ॥

स्वप्नार्थमिति निर्णीय सा दध्याविति धीमती ।
न राज्यं न पतिश्चेति द्वयमापतितं मम ॥ ५५० ॥
व्यलपन्मुक्तकण्ठं च सा [2]तारं [3]तारलोचना ।
दुर्दशापतितानां हि स्त्रीणां धैर्यगुणः कुतः ? ॥ ५५१ ॥
हा नाथ ! मां किमत्याक्षीः ? किं भाराय तवाभवम् ? ।
न ह्यात्मीया कञ्चुलिका जातु भाराय [4]भोगिनः ॥ ५५२ ॥
[5]नर्मणान्तरितोऽभूस्त्वं यद्वा वल्लीवने क्वचित् ? ।
तत्प्रकाशो भव चिरं न हि नर्मापि [6]शर्मदम् ॥ ५५३ ॥
प्रार्थये वः प्रसीदन्तु मह्यं हे वनदेवताः ! ।
प्राणेशं दर्शयत मे मार्गं वा तत्पवित्रितम् ॥ ५५४ ॥
द्विधा भव धरित्रि ! त्वं [7]वालुंकमिव [8]पाक्तिमम् ।
त्वद्दत्तविवरेणाहं प्रविश्याप्नोमि [9]निर्वृतिम् ॥ ५५५ ॥

१ आम्रवृक्षः । २ उच्चैः । ३ दीर्घलोचना । ४ सर्पस्य । ५ हास्येन । ६ कल्याणदम् । ७ वालुंकं चिर्भटकं, भाषायां 'चीभडुं' इति । ८ पक्वम् । ९ शान्तिम् ।

एवं भैमी विलपंती रुदंती नयनोदकैः ।
सारणीवारिभिरिव सिषेचारण्यपादपान् ॥ ५५६ ॥
जले स्थले वा छायायामातपे वा नल विनां ।
ज्वरसतीया इव तस्या न निर्वृतिलवोऽप्यभूत् ॥ ५५७ ॥
—त्रिषष्टि० प० ८, स० ३, पृ० ५९ ।

[ ३३ ]

## सगरचक्रवर्तिषष्टिसहस्रपुत्रणां मरणेऽन्तःपुरस्त्रीणां सेनाधिपतिसामन्तादीनां च विलापाः ।

चक्रिसैन्येऽथ सैन्यानामाक्रन्द उदभून्महान् ।
महाजलाशय इव, रिक्तीभवति [1]यादसाम् ॥ १ ॥
केऽप्यास्वादितकिम्पाका इव पीतविषा इव ।
सर्पदष्टा इवोन्मूर्च्छा, पेतुर्वसुमतीतले ॥ २ ॥
केचिदास्फालयामासुः, स्वशिरो नालिकेरवत् ।
केचिदाजघ्निरे वक्षः, [2]कृतागस्कमिवासकृत् ॥ ३ ॥
पादान् प्रसार्य केऽप्यस्थुः, कृत्यमूढाः पुरन्ध्रिवत् ।
[3]भृगूण्यारुरुहुर्झम्पां, कपिवत् केऽपि [4]दित्सवः ॥ ४ ॥
कूष्माण्डदारमुदराण्येके स्वानि दिदीर्षवः ।
चकृषुः क्षुरिकां कोशाद्यमजिह्वासहोदराम् ॥ ५ ॥

१ जलचरजीवानाम् । २ कृतापराधम् । ३ भृगूणि शिखराणि पर्वतात्पतनस्थानानीत्यर्थः । ४ दातुमिच्छवः ।

आत्मानं तरुशाखायामुद्बद्धुमनसोऽपरे ।
बबन्धुरुत्तरीयाणि, [1]लीलादोलां यथा पुरा ॥ ६ ॥
शिरसोऽत्रोटयन् केऽपि, केशान् क्षेत्रात्कुशानिव ।
केप्यंगलग्नं नेपथ्यं, चिक्षिपुः स्वेदबिंदुवत् ॥ ७ ॥
हस्तन्यस्तकपोलाः केऽप्यस्थुश्चिन्तापरायणाः ।
प्रदत्तोत्तंभनस्तम्भजर्जराकारकुड्यवत् ॥ ८ ॥
असंवहन्तः केचिच्च, परिधानांशुकान्यपि ।
[2]विशंस्थुलाङ्गा व्यलुठन्नुन्मत्ता इव भूतले ॥ ९ ॥
विलापोऽन्त पुरे स्त्रीणां, [3]कुररीणामिवाम्बरे ।
हृदयाकम्पजनकः, पृथक् पृथगभूदिति ॥ १० ॥
प्राणेशान् गृह्णतास्माकं, प्राणानत्रैव मुञ्चता ।
किम[4]र्धवैशसमिदं रे दैवाचरितं त्वया ? ॥ ११ ॥
प्रसीद विवरं देहि, स्फुटित्वा देवि ! [5]काश्यपि ! ।
[6]अभ्रादपि पतितानां, शरणं धरणी खलु ॥ १२ ॥
अद्य चंदनगोधानामिवास्माकमुपर्यहो ।
विद्युद्दण्डम[7]काण्डेऽपि, दैव ! पातय निर्दयम् ॥ १३ ॥
प्राणाः ! शिवा वः पन्थानो, यूयं यात यथेप्सितम् ।
विमुञ्चतास्मच्छरीरमवक्रयकुटीमिव ॥ १४ ॥
समायाहिं महातन्द्रे, ! सर्वदुःखापनोदिनि ! ।
मन्दाकिनि ! त्वमुत्पत्य, जलमृत्युं प्रयच्छ वा ॥ १५ ॥

१ क्रीडादोलाम् । २ शिथिलाङ्गाः । ३ मृगीणाम् । ४ अर्धमरणम् । ५ हे पृथ्वि ! । ६ आकाशात् । ७ असमये ।

अस्यां गिरितलाटव्यां, प्रादुर्भव दवानल ! ।
अनुयामः पतिगतिं, तव साहाय्यकाद्यथा ॥ १६ ॥
हा केशपाश ! मुञ्चाद्य, सुमनोदामसौहृदम् ।
युवाभ्यां दीयतां नेत्रे !, कज्जलाय जलाञ्जलिः ॥ १७ ॥
पत्रलेखनकण्डूतिं, मा कृथाथां कपोलकौ ! ।
अलक्तकव्यतिकरश्रद्धामधर ! मा धरः ॥ १८ ॥
गीताकर्णनवत्कर्णौ !, त्यजतं रत्नकर्णिकाम् ।
हे कंठ ! कंठिकोत्कंठां मा कार्षीस्त्वमतः परम् ॥ १९ ॥
वक्षोजावद्य वां हारो, [3]नीहारोंभोरुहामिव ।
सद्यो हृदय ! भूयास्त्वं, पक्वैर्वारुकवद् द्विधा ॥ २० ॥
बाहू ! कङ्कणकेयूरैर्भारैरिव कृतं च वाम् ।
नितम्ब ! रसनां मुञ्च, प्रातश्चन्द्र इव प्रभाम् ॥ २१ ॥
अनासैरिव पर्याप्तं, हे पादौ ! पादभूषणैः ।
अलमंगांगरागैस्तैः, कपिकच्छूमयैरिव ॥ २२ ॥
एवमंतःपुरस्त्रीणां, हृदि तैः करुणस्वरैः ।
वनान्यपि प्रतिरवै-रुरुदुः सह बन्धुवत् ॥ २३ ॥
सेनाधिपतिसामन्त-मण्डलेशादयोऽपि हि ।
शोकह्रीक्रोधशङ्कादि-विचित्रं प्रालपन्निति ॥ २४ ॥
हा स्वामीपुत्राः ! क्व गता न हि संविद्महे वयम् ।
भूतानुयामोऽद्य यथा, स्वामिशासनतत्पराः ॥ २५ ॥

१. पुष्पमाला । २ संबन्धः । ३ हिमम् । ४ कर्कटीवत् । ५ अलम् । ६ हे अंग ! । ७ कण्डुजनक औषधिविशेषः ।

किं [1]तिरोधानविद्येह, भवतां काप्युपस्थिता ।
सा तु खेदाय भृत्यानां, प्रयोक्तुं नहि युज्यते ॥ २६ ॥
युष्मान्नष्टान् विनष्टान् वा, हित्वा गतवतां सुखम् ।
कथं द्रक्ष्यति नः स्वामी, ऋषिहत्याकृतामिव ? ॥ २७ ॥
युष्मान्विना गतान्नोऽद्य, लोकोऽप्युपहसिष्यति ।
हृदय ! स्फुट रे सद्यः, पयःसिक्ता[2]मकुम्भवत् ॥ २८ ॥
तिष्ठ तिष्ठाहि[3]खेट ! त्वं, छलेन ध्वंस नः पतीन् ।
व्यग्रानष्टापदत्राणे, दग्ध्वायासीः क रेऽधुना ? ॥ २९ ॥
खड्गः खड्गो धन्व धन्व, शक्तिः शक्तिर्गदा गदा ।
युद्धाय सज्जीभव रे, कियन्नंष्ट्वा गमिष्यसि ? ॥ ३० ॥
अमी तावदिह त्यक्त्वा, ययुर्नः स्वामिसूनवः ।
ह हा तत्र गतानद्य, त्यक्ष्यति स्वाम्यपि द्रुतम् ॥ ३१ ॥
अगतानपि नस्तत्र, जीवतोऽत्रैव तिष्ठतः ।
श्रुत्वा लज्जिष्यते स्वामी, यदि वा निग्रहीष्यति ॥ ३२ ॥
एवं रुदित्वा विविधं, भूयः संभूय ते मिथः ।
[4]सहजं धैर्यमालम्ब्य, मन्त्रयामासुरित्यथ ॥ ३३ ॥
पूर्वोदितेविधानेभ्यः, परोक्तविधिर्वद्विधिः ।
सर्वेभ्यो बलवांस्तस्मान्न कोऽपि बलवत्तरः ॥ ३४ ॥
तत्राशक्यप्रतीकारे, मुधा प्रतिचिकीर्षितम् ।

१ अदृश्यकरणविद्या । २ अपक्वः । ३ हे नागराज ! । ४ स्वाभाविकम् । ५ पूर्वविधिभ्यः परोविधिर्बलवान् इति नियमेन । ६ दैवम् ।

व्योम्नः प्रतिजिघांसेव[1] जिघृक्षेव[2] नभस्वतः ॥ ३५ ॥
एभिः प्रलपैस्तदलं, हस्त्यश्वाद्यखिलं प्रभो ।
इदानीमर्पयामः स्वं, वयं न्यासधरा इव ॥ ३६ ॥
उचितं रुचितं चापि, यत्किञ्चन ततः परम् ।
विदधातु तदस्मासु, स्वामी किं नो विचिन्तया ॥ ३७ ॥
एवमालोच्य ते सर्वे, सर्वमन्तःपुरादिकम् ।
आदाय दीनवदनाः, प्रत्ययोध्यं प्रतस्थिरे ॥ ३८ ॥
मन्दमन्दमथोत्साहहीना म्लानाननेक्षणाः ।
अयोध्यासन्निधिभुवं प्रापुः सुप्तोत्थिता इव ॥ ३९ ॥
[3]विषण्णास्तत्र च स्थित्वा, नीता वध्यशिलामिव ।
उपविश्य महीपीठेऽन्योऽन्यमेवं बभाषिरे ॥ ४० ॥
भक्ता बहुज्ञा दोषमन्तो, दृष्टसाराः पुरापि च ।
इत्यादिष्टा वयं राज्ञा, सत्कृत्य तनयैः सह ॥ ४१ ॥
विना कुमारानभ्येत्य, स्वामिनोऽग्रे वयं कथम् ।
वदनं धारयिष्यामो, नासिकारहिता इव ? ॥ ४२ ॥
कथं वा कथयिष्यामः, पुत्रवृत्तान्तमीदृशम् ? ।
[4]अकाण्डाशनिसम्पात-सदृशं वसुधापतेः ॥ ४३ ॥
अतः परमहो तत्रास्माकं गन्तुं न युज्यते ।
युज्यते किंतु मरणं, शरणं सर्वदुःखिनाम् ॥ ४४ ॥
सम्भावनायाः प्रगुणीकृतायाः अंशभाजिनः ।

१ प्रति हंतुमिच्छा । २ ग्रहीतुमिच्छा । ३ खिन्नाः । ४ असमये वज्रपात इव ।

पुंसो शरीरिकस्येव, जीवितव्येन किं ननु ? ॥ ४५ ॥
किं च पुत्रक्षयं श्रुत्वा, दुःश्रवं चक्रवर्त्यपि ।
चेद्विपद्येत[1] तदपि, मृत्युरग्रेसरो हि नः ॥ ४६ ॥
मन्त्रयित्वेति ते सर्वे, मरणे कृतनिश्चयाः ।
यावत्तस्थुस्तावदागादेकः काषायभृद्[2]द्विजः ॥ ४७ ॥

—त्रिषष्टि० प० २, स० ६, पृ० ८६–८७

[ ३४ ]

## षष्टिसहस्रपुत्राणां मरणश्रवणे सगरचक्र्यादीनां विलापः ।

नाशेनैकस्य पुत्रस्य न शोचिष्याम्यतःपरम् ।
मद्भृत्यमपि मा शोचीः सर्वपुत्रक्षयेऽपि हि ॥ १५४ ॥
षष्टिसहस्रसंख्यास्ते, दोर्विक्रमविराजिनः ।
राजन् ! विपन्नास्तनया, युगपत् कालयोगतः ॥ १५५ ॥
अत्रांतरे च सामन्तामात्यसेनाधिपादयः ।
अपरेऽपि कुमाराणां, जना आसन्नवर्तिनः ॥ १५६ ॥
उत्तरीयछन्नमुखाः, शालीना[3] इव लज्जया ।
विवर्णदेहाः खेदेन दवदग्धा[4] इव द्रुमाः ॥ १५७ ॥
अत्यंतशून्यमनसः, पिशाचकिङ्करा इव ।
उदश्रुलोचना दीना मुषिताः कृपणा इव ॥ १५८ ॥

१ म्रियेत । २ काषायवस्त्रधारी । ३ लज्जावन्त इव । ४ वनाग्निदग्धाः ।

प्रस्खलच्चरणन्यासा, दृष्टा इव भुजङ्गमैः ।
[1]आस्थानं युगपद्राज्ञोऽविशन् सङ्केतिता इव ॥ १५९ ॥

॥ चतुर्भिः कलापकम् ॥

राजानं ते नमस्कृत्य, यथास्थानमुपाविशन् ।
[2]विविक्षव इव क्षोणीं, ते च तस्थुरधोमुखाः ॥ १६० ॥

तां विप्रवाचमाकर्ण्य, दृष्ट्वा तांश्च तथाविधान् ।
कुमारवर्जमायातान्[3]निषादिद्विपानिव ॥ १६१ ॥

लिखितो नूल्लिखितो नु, सुप्तो नूत्तम्भितो नु वा ।
शून्यो निष्पन्दनयनो, द्रागभूद्वनीपतिः ॥ १६२ ॥

॥ युग्मम् ॥

आसमूर्छमधैर्येण धैर्येण च [4]तथास्थितम् ।
पुनर्बोधयितुं विप्रः, प्रोवाच पृथिवीपतिम् ॥ १६३ ॥

त्वमसि [5]क्ष्मापते ! विश्वमोहनिद्राविवस्वतः ।
ऋषभस्वामिनो वंश्यो, भ्राताचास्यजितप्रभोः ॥ १६४ ॥

इत्थं [6]पृथग्जन इव, भवन्मोहवशंवदः ।
[7]तयोः कलङ्कमादत्सेऽधुना किं धरणीधव ! ॥ १६५ ॥

राजापि दध्यौ विप्रोऽयं, [8]स्वपुत्रांतापदेशतः ।
मत्पुत्रक्षयनाख्यस्य, जगौ प्रस्तावनामिमाम् ॥ १६६ ॥

१ सभामण्डपम् । २ प्रविष्टुमिच्छवः । ३ हस्तिपकशून्यगजानिव ।
४ स्वस्थम् । ५ हे राजन् । ६ सामान्यजन इव । ७ ऋषभाजितस्वामिनोः ।
८ स्वपुत्रमरणमिषात् ।

व्यक्तं च शंसत्यधुना, कुमाराणामसौ क्षयम् ।
कुमारवर्जमायाताः प्रधानपुरुषा अमी ॥ १६७ ॥
कुतः सम्भाव्यते तेषां, क्षयश्च मनसापि हि ।
भुवि सञ्चरतां स्वैरं, वने केसरिणामिव ॥ १६८ ॥
महारत्नपरीवारा, दुर्वाराः स्वौजसापि हि ।
केन शक्या निहन्तुं ते, हंतास्खलितशक्तयः ? ॥ १६९ ॥
चिंतयित्वेति किमिदमिति पृष्टाः क्षमाभुजा ? ।
ज्वलनप्रभवृत्तान्तं, शशंसुः सचिवादयः ॥ १७० ॥
ताडितः कुलिशेनेव, तेनोदंतेन[1] भूपतिः ।
पपात मूर्छितः पृथ्व्यां, पृथिवीमपि कम्पयन् ॥ १७१ ॥
मातरश्च कुमाराणां, निपेतुर्मूर्छया क्षितौ ।
पितुर्मातुश्च तुल्यं हि, दुःखं सुतवियोगजम् ॥ १७२ ॥
राजवेश्मनि लोकानामाक्रन्दोऽथ महानभूत् ।
समुद्रतटगर्तांतर्गतानां यादसामिव ॥ १७३ ॥
मन्त्र्यादयोऽपि ते स्वामिपुत्रव्यापत्ति[2]साक्षिणम् ।
आत्मानमतिनिन्दन्तो, रुरुदुः करुणस्वरम् ॥ १७४ ॥
तादृशीं स्वामिनोऽवस्थां, तां वीक्षितुमिवाक्षमाः ।
अंजलिच्छन्नवदनाः, पूचक्रुर्वेत्र[3]पाणयः ॥ १७५ ॥
प्राणप्रियाण्यप्यस्त्राणि, त्यजन्तश्चात्मरक्षकाः ।
प्रलपन्तोऽलुटन् भूमौ, वातभग्ना इव द्रुमाः ॥ १७६ ॥

१ वृत्तान्तेन । २ व्यापत्तिर्मरणम् । ३ द्वारपालाः ।

स्वकञ्चुकान् कञ्चुकिनः, स्फाटयन्तोऽरटन् भृशम् ।
दैवानलान्तः[1] पतिता, इव तित्तिरिपक्षिणः ॥ १७७ ॥
हृदयं कुट्टयन्तः स्वं, चिरात्प्राप्तमिव द्विषम् ।
चेट्यश्चेटाश्च चक्रन्दुर्हताः स्म इति भाषिणः ॥ १७८ ॥
तालवृन्तानिलेनाम्बुसेकेन च महीपतिः ।
राज्यश्च संज्ञामासेदुर्दुःखशल्यप्रतोदनीम्[2] ॥ १७९ ॥
मैलिनीभूतवासस्का[3], नेत्राश्रुजलकज्जलैः ।
छाद्यमानकपोलाक्ष्यो लुलितालकवल्लिभिः[4] ॥ १८० ॥
उरःस्थलकराघातप्रत्रुटद्धारयष्टयः ।
निर्भरं भूमिलुठनस्फुटत्कंकणमौक्तिकाः ॥ १८१ ॥
धूमं शोकानलस्येवोज्झन्त्यो निःश्वासमुच्चकैः ।
शुष्यत्कण्टाधरदला, राजपत्न्योऽरुदन्नथ ॥ १८२ ॥
॥ त्रिभिर्विशेषकम् ॥

धैर्यं लज्जां विवेकं च, विहायैकपदेऽपि हि ।
राज्ञीवच्छोकविधुरो, विललापेति भूपतिः ॥ १८३ ॥
हे कुमाराः ! क्व यूयं स्थ, निर्वतध्वं विहारतः !
राज्यायावसरो वोऽद्य, व्रताय सगरस्य तु ॥ १८४ ॥
कथं न कोऽपि ब्रूते च, सत्यमुक्तं द्विजन्मना ? ।
दैस्युनेव[5] छलज्ञेन, दैवेन मुषितोऽस्मि[6] ही ॥ १८५ ॥
अरे रे दैव ! कुत्रासि, कुत्रासि ज्वलनप्रभ ! ।

---

१ वनाग्निमध्ये । २ दुःखशल्यनाशनीम् । ३ मलिनीभूतवस्त्राः । ४ विकीर्णकेशसमूहैः । ५ चौरेणेव । ६ चोरितोऽस्मि ।

अक्षत्रमिदमाचर्यं कायासीर्नागपांशन ! ॥ १८६ ॥
सेनापते ! क तेऽगच्छच्चंडदोर्दण्डचण्डिमा ? ।
क्षेमङ्करत्वमगमत्, क पुरोहितरत्न ! ते ? १८७ ॥
गलितं वर्धके ! किं ते, दुर्गनिर्माणकौशलम् ? ।
गृहिन् ! संजीवनौषध्यः, किं ते कुत्रापि विस्मृताः ? ॥१८८॥
गजरत्न ! किमासस्त्वं, तदा गजनिमीलिकाम् ! ।
अश्वरत्न ! समुत्पन्नं, शूलं किं भवतस्तदा ? ॥ १८९ ॥
चक्रदंडाऽसयो ! यूयं, किं तदानीं तिरोहिताः ? ।
अभूतां मणिकाकिण्यौ, निष्प्रभौ किं दिनेन्दुवत् ? ॥ १९० ॥
आतोद्यपुटवद्भिन्ने, किं युवां छत्रचर्मणी ! ।
नवापि निधयो ! यूयमस्ताः किमनया भुवा ? ॥ १९१ ॥
युष्मद्विश्वासतोऽशंकं, रममाणाः कुमारकाः ।
सर्वैरपि न यत्त्रातास्तस्मात् पन्नगपांसनात् ॥ १९२ ॥
करोम्येवं विनष्टे किमिदानीं ज्वलनप्रभम् ? ।
सगोत्रमपि चेद्धन्मि न हि जीवंति मत्सुताः ॥ १९३ ॥
ऋषभस्वामिनो वंशे, नैवं कोऽप्यासदन्मृतिम् ? ।
त्रपाकरमिमं मृत्युं, हा वत्साः कथमाप्नुत ? ॥ १९४ ॥
पूर्वे मदीयाः सर्वेऽपि, पुरुषायुषजीविनः ।
दीक्षामाददिरे स्वर्गमपवर्गं च लेभिरे ॥ १९५ ॥
स्वेच्छाविहारश्रद्धापि, भवतां नाप्यपूर्यत ।

---

१ नागदूषकः । २ नेत्रनिमीलिकाम् । ३ मोक्षम् ।

[1]अरण्यानीसमुत्पन्न[2]भूरुहामिव [3]दोहदः ॥ १९६ ॥
उदयाय च पूर्णेन्दुर्दैवाद् ग्रस्तश्च राहुणा ।
[4]फलेग्रहिश्च सञ्जज्ञे, तरुर्भग्नश्च [5]कुंम्भिना ॥ १९७ ॥
आगता च [6]तरी तीरं, भग्ना च तटभूभृता ।
उन्नतश्च [7]नैवाम्भोदो, विकीर्णश्च [8]नभस्वता ॥ १९८ ॥
निष्पन्नं च [9]व्रीहिवणं, दग्धं च नववह्निना ।
धर्मार्थकामयोग्याश्च, जाता यूयं हताश्च हा ॥ १९९ ॥
॥ त्रिभिर्विशेषकम् ॥
प्राप्यापि मद्गृहं वत्सा !, अकृतार्था गता ह हा ।
आढ्यस्य कृपणस्येव, वेश्मोपेत्य [10]वनीपकाः ॥ २०० ॥
तदद्य किमु चक्राद्यैः, रत्नैर्निधिभिरप्यलम् ? ।
युष्मान् विना विरहिणो, ज्योत्स्नोद्यानादिकैरिव ॥ २०१ ॥
षट्खंडभरतक्षेत्रराज्येन यदि वाऽ[11]सुभिः ।
असुभ्योऽपि प्रियैः पुत्रैर्विना भूतस्य किं मम ? ॥ २०२ ॥
एवं विलापिनमथो, भूनाथं श्रावकद्विजः ।
स बोधयितुमित्यूचे, सुधामधुरया गिरा ॥ २०३ ॥

—त्रिषष्टि० प० २, स० ६, पृ० ९१–९३

---

१ महदरण्यम् । २ वृक्षाणामिव । ३ मनोरथः । ४ फलवान् । ५ हस्तिना । ६ नौका । ७ नूतनमेघः । ८ वायुना । ९ शालिवनम् । १० याचकाः । ११ प्राणैः ।

[ ३५ ]

## प्रियायाश्चयवने ललिताङ्गस्य आक्रन्दः ।

हा दयिते ! हा दयिते !, क्वासि क्वास्येहि दर्शनं देहि ।
यत् त्वां विना त्रिदिवमपि, दुःखकरं नरकवज्जाने ॥ ७६ ॥
सततं त्वयि चाटुरसे, मम वचसि प्राप नापराऽवसरम् ।
त्वद्वदनेन्दुज्योत्स्ना—पानरते दृक्चकोरे च ॥ ७७ ॥
अस्वप्नस्य ममास्तु, स्वप्नेऽप्यन्याश्रयः[1] प्रिये ! कस्मात् ।
लवमात्रं त्वद्विरहा—सहेऽत्र मयि तत् कथं कोपः ? ॥७८॥—युग्मम् ॥
न कदापि त्वं कुपिता, मयाऽनुनीताऽपि नैव तेन त्वम् ।
अनुनयसुखाय[2] कृतकं[3], कृत्वा कोपं स्थिता क्वापि ॥७९॥
ज्ञातमिदं तेन त्वां, नन्दनवनकल्पवल्लिकुञ्जान्तः ।
निजवल्लभां निभाल्य, क्रमपतितोऽनुनयमेवकर्ताऽहम् ॥८०॥
इति बुद्ध्येव स नन्दन—वने भ्रमन् प्रतिनिकुञ्जमित्यूचे ।
हा सुमुखि ! हा घनस्तनि, हा सुश्रोणि ! किमिहापि न त्वमसि ॥८१

—पद्मानन्दकाव्यम् स० ४

---

१ अन्या योषित् । २ कोपापनयसुखाय । ३ कृत्रिमम् ।

[ ३६ ]

## वृषभस्वामिनिर्वाणकल्याणे भरतस्य परिदेवनम्।

अस्तोकशोकसंछन्नो, भरतो मूर्च्छयाऽपतत् ।
दुःखच्छेदि तदाऽज्ञासीन् न कोऽपि रुदितुं यतः ॥ २१४ ॥

चक्रिणं ज्ञापयन् दुःखखेदभेदनकारि तत् ।
शक्रः सङ्क्रन्दनं, चक्रे, समग्रैस्त्रिदशैः सह ॥ २१५ ॥
रुदितैरुदितैस्तेषां, विमूर्च्छश्चक्रवर्त्यपि ।
रुरोद रोदसीक्रोडं, पूत्कारैः परिपूरयन् ॥ २१६ ॥

रुदितेन क्षणात् तेन, शोकोऽन्तश्चक्रवर्तिनः ।
कुठारस्फारघातेन, दारुवत् प्राप दीर्णताम् ॥ २१७ ॥
दुःखशल्याकुलस्वान्तविशल्यीकारकारणम् ।
तदादि किल लोकेऽपि, शोकेऽभूद् रुदितक्रमः ॥ २१८ ॥
विललाप ततः क्ष्मापः, सन्त्यज्येत्यात्मधीरताम् ।
हा तात ! हा जगत्त्रातस्त्यक्त्वा मां गतवानसि ॥ २१९ ॥
बाहुबल्यादयस्तेऽपि भ्रातरो मम निर्ममाः ।
स्वसारौ ब्राह्मी-सुन्दर्यौ, पुण्डरीकादयोऽङ्गजाः ॥ २२० ॥
श्रेयांसप्रमुखाः पौत्रा, मां मुक्त्वैकाकिनं हहा ।
प्रक्षीणाखिलकर्माणो, निर्वाणपदमाश्रयन् ॥ २२१ ॥
जीवाम्यद्यापि पापोऽहं, राज्यमोहं त्यजामि न ।
त्वद्धर्मदेशनाशर्म, त्वां विना नाथ ! कुत्र मे ? ॥ २२२ ॥

---

१ रोदनम् । २ नृपः । ३ पुत्राः ।

मोहप्ररोहणादेवमुद्विलापमिलापतिम् ।
प्रबोधमधुरैर्वाक्यैर्बोधयामास वासवः ॥ २२३ ॥

—पद्मानन्दकाव्यम् स० १८

[ ३७ ]

## प्रभोर्दर्शनवञ्चनात् बाहुबलेर्विलापः ।

तदाकर्ण्य वचः कर्ण-कीलं, तक्षशिलापतिः ।
सद्यो दधार धीरोऽपि, नेत्रे बाष्पजलाविले ॥ ३७४ ॥

दध्यौ वन्ध्योद्यमश्चेति, चेतितं न मयेति यत् ।
व्रतात् प्रभृति नैकत्रा-वस्थितिं कुरुते प्रभुः ॥ ३७५ ॥

अपि प्रकृतिपौराद्याः प्राप्नुवन्तु पवित्रताम् ।
इति तैः सह वन्दिष्ये, स्वामिपादान् दिनोदये ॥ ३७६ ॥

मनोरथो मे भग्नोऽयमभाग्योद्घातपाततः ।
हाहा हतोऽस्म्यहं पापो, निष्पुण्यानां शिरोमणिः ॥३७७॥

—युग्मम् ॥

विलंबकारिणं धिग् मां लोकानुग्रहकारणात् ।
परार्थकाम्यया मौर्ख्यात्, स्वार्थभ्रंशोऽभवन्मम ॥ ३७८ ॥

धिग् मामबुद्धिमूर्द्धन्यं, धिग् धिग् मां च प्रमादिनम् ।
यत् तातचरणाब्जानामर्चनेनास्मि वंचितः ॥ ३७९ ॥

---

१ इन्द्रः । २ बाहुबलिः । ३ अश्रुपरिपूर्णे । ४ अभाग्योदयात् ।

वृथा मम समुत्पन्नो, विभ्रमो यद्[1] विभावरी ।
तद्दिनं दृश्यते यस्मिन्निनो विश्वप्रकाशकः ॥ ३८० ॥
भास्वंतं सवितारं तं, विनाऽहरपि शर्वरी[3] ।
जाता यन्मे तमोजालैः किलान्धाः सकला दिशः ॥३८१॥
प्रमादसदनं स्वामिन्!, यद्यहं तत् कथं त्वया ।
नात्मपुत्रप्रमोदाय, दिनमेकमपि स्थितम्? ॥ ३८२ ॥
लोकेष्वपत्यवत् पूर्वं, ममत्वमकृथा यथा ।
सांप्रतं निर्ममत्वं तं, तथाऽपत्येषु लोकवत् ॥ ३८३ ॥
धिग् मामेकदिनाहार-ग्रहणेनापि न प्रभुः ।
मानितस्त्रिजगन्मान्यो, जनसामान्यनप्त्रहो ॥ ३८४ ॥
त्वदसंभावनोद्भूतं, प्रभूतं, मे पराभवम् ।
अपनेष्यति को नाम, नाथ! नाथं विना परः? ॥३८५॥
यावत् तेऽजनि वात्सल्यं, सर्वेष्वन्येषु सूनुषु ।
मय्यासीत् तावदेकस्मिन्, कुत्र तत् ते गतं प्रभो! ॥३८६॥
बाल्येऽपि हृदयक्रोडे, सदा मां कृतवानसि ।
संप्रत्यपि ततो नाथ!, हृन्मध्ये धृतवान्न किम्? ॥३८७॥
लोकभर्तुरनालोक–शोकशंकाऽतिसङ्कुलम् ।
ततस्तं विषमूर्च्छालमिव मन्त्रीत्यबोधयत् ॥ ३८८ ॥

—पद्मानन्दकाव्यम् स० १३

---

१ रात्रिः । २ स्वामी । ३ निशा । ४ तवासत्कारजन्यम् ।

[ ३८ ]

# पुत्रवियोगे मरुदेवाया विलापः ।

भरते नृपतौ पुरःस्थिते, स्मृतपुत्रेश्वरतापरोन्नतिः ।
स्रवदश्रुविमिश्रलोचना, मरुदेवा व्यलपत्तरामिति ॥११७॥

क्व तदाऽऽतपवारणं[1] पुरा, मन सूनोः शिरसीन्दुसुन्दरम् ? ।
अधुना क्व दवानलोल्वणं, तपचण्डं तपनांशुमण्डलम्[2] ? ॥११८॥

क्व स चामरचारुचालनैश्चलनैत्राकरकंकणक्वणः ? ।
श्रवसोरधुना[3] सुतस्य मे, मशकश्रेणिगुणत्कृतिः[4] क्व सा ? ॥११९॥

क्व पुरा रथवारणादिभिः सुखयानानि ममाङ्गजन्मनः ।
अधुना क्व पदातिचारिता, चरणत्राणमृते[5] विहारिणः ? ॥१२०॥

मणिपङ्कमुखासने सुखा-सनमन्तः, सदनं क्व तस्य तत् ? ।
क्व निरासनता वनान्तरे, गिरिशीर्षे निरतस्य साम्प्रतम् ॥१२१॥

क्व तदस्य सदैव देवतोपहृताहारजलोपजीवनम् ।
क्व स सम्प्रति भैक्ष्यसम्भृता–भ्यवहारस्तदसम्भवोऽपि वा ॥१२२॥

श्रवणामृतवर्षणं क्व तन्–मृदुगीतं शयने द्युसुभ्रुवाम्[6] ।
क्व वनेऽस्य सुतस्य साम्प्रतं–श्रुतिसूचीघनघूकघूत्कृतिः[7] ॥१२३॥

स्तनयित्नुकृतं[8] तपात्ययो[9]–द्धुरधाराजलमुल्बणानिलम् ।
सहते स तमस्विनीषु ही, गिरिसंगी गजवन्ममाङ्गजः ॥१२४॥

---

१ छत्रम् । २ सूर्यमण्डलम् । ३ कर्णयोः । ४ गणगणाटशब्दः । ५ उपानद्विना । ६ देवाङ्गनानाम् । ७ कर्णयोः सूचीतुल्या । ८ मेघकृतम् । ९ वर्षाकाले ।

कमलाकरवद् वनाश्रयो, हिमसन्दोहमयानिलोर्मिभिः ।
रजनीषु स हैमनीषु ही, क्रममेत्यावरणेन वर्जितः ॥ १२५ ॥
भृशमुष्णऋतौ सुदारुणैः, किरणैरुष्णरुचेश्चिरं स्थिरैः ।
म्लपिताननीरजोऽङ्गजः, स सरोवत् परितोऽपि शुष्यति ॥ १२६ ॥
स निरावरणो निराश्रय-स्तनयो मे [२]विसहाय एव हा ।
शबरो गिरिगः स्फुरद् यथा, खलु कालेष्वखिलेषु दुःखितः ॥ १२७ ॥
पृथिवीं परिपालयन्त्यमी, भरतो बाहुबलिः सुता परे ।
न तु कोऽपि करोति संकथामपि सूनोर्मम धिग् विधिक्रमः ॥ १२८ ॥
इति सन्ततसंस्मृते सुतं, [३]पुरतः सङ्गतवद् विजानती ।
इदमालपति स्म सा भृशं, समुपालम्भनकारिवाग्भरा ॥ १२९ ॥
न कदापि ददासि दर्शनं, विशदज्ञाननिधानमानस ! ।
किमु वत्स ! न वेत्सि वत्सलां, जननीं शोकसमाकुलामिमाम् ॥ १३० ॥
जरतीत्य[४]वधीरणाऽस्ति चेन् मयि पौत्राः प्रतिपौत्रकास्ततः ।
किमु [५]लल्लुरजल्पिनोऽपि नो, कथमुक्तं प्रथयन्ति ते मनः ? ॥ १३१ ॥
अनुगै रहितोऽसि वत्स, तैरपि कच्छमुखैः क्षितीश्वरैः ।
कथमेकक एव कानने, चरसि क्रूरमृगारिभैरवे ॥ १३२ ॥
अनुगम्य भवन्तमात्मजं, स्वमवश्यं [६]वरिवस्ययाम्यहम् ।
तव दुःखजरोदनाश्रुभिः, किमु कुर्वे बत लुप्तलोचना ? १३३ ॥
भजति त्वयि राज्यमुज्ज्वलं, सुख[७]मुन्मेषमियेष यन्मयि ।
अधुना विपिनं श्रयत्यऽभू-दसुखं कोटिगुणं ततः सुत ! ॥ १३४ ॥

---

१ भानोः । २ सहायरहितः । ३ अग्रतः स्थितमिव । ४ अपमानः ५ अव्यक्तमधुरजल्पिनः । ६ सेवां करोमि । ७ प्रादुर्भावम् ।

इति सा भृशमार्भसम्भवाऽसुखसम्भावनयाऽभिभाविता ।
गलदश्रुजलप्लुतांशुका, व्यलपत् कल्पितमौलिचालना ॥१३५॥

—पद्मानन्दकाव्यम् स० १४

## [ ३९ ]
## गुरोः स्वर्गलोकगमने विजयसेनसूरेर्विलापः ।

श्रुत्वा तद्वज्राहत इवाभवद्बाष्पपूर्णनयनयुगः ।
एष पुनर्दुःखादिदमजीगदद्गद्गदध्वनितः ॥ २०२ ॥

उच्छिन्नः सुरभूरुहोऽप्यपगता स्वर्धामधेनुः पुन-
भग्नः कामघटो मणिः सुमनसां चूर्णीबभूव क्षणात् ।
दग्धा चित्रलता गतः शकलतां हा दक्षिणावर्तभृ-
त्कम्बुः स्वर्गिगृहं गते त्वयि गुरौ श्रीहीरसूरीश्वर: (र!)॥२०३॥

हा हा भूधनबोधनैकविबुध ! श्रीसूरिचूडामणे !
हा सिद्धान्तसमुद्रमन्दरगिरे ! हा शासनाहर्मणे ! ।
हा हा यौक्तिकवाक्पुरन्दरगुरो ! वैराग्यवारांनिधे !
हा कारुण्यनिधे ! विधेर्वशतया त्वं कुत्र यातः प्रभो !? ॥२०४॥

अद्यास्तं गतवान्सहस्रकिरणश्चन्द्रोऽपि तन्द्रां गतः
शुष्कः क्षीरनिधिर्विधेर्विलसितैर्मेरुर्विलीनः पुनः ।

---

१ पुत्रदुःखविचारणया । २ वदति स्म । ३ कल्पवृक्षः । ४ कामधेनुः । ५ शङ्खः । ६ (अकब्बर) नृपप्रतिबोधनेऽद्वैतनैपुण्यवान् । ७ सूर्यः । ८ युक्तियुक्तवाचि वाचस्पतिः । ९ समुद्रः । १० निद्राम् ।

भूमौ श्रीजिनसार्वभौमविभवभ्राजिष्णुतां बिभ्रति
श्रीसूरीश्वरहीरहीरविजये गीर्वाणगेहं गते ॥ २०५ ॥
गर्जन्ति प्रतिमन्दिरं प्रमुदिता मिथ्यादृशः कौशिकाः
श्रीमत्संघसरोजकाननमिदं म्लानिं च धत्तेऽधुना ।
संप्राप्तप्रसराः स्फुरन्ति परितो नैक्तञ्चरा दुर्दृशो
यातेऽस्तं गवि हीरसूरितरणौ स्फूर्तिं तमः शीलति ॥२०६॥

—हीरसौभाग्यम् स० १७

[ ४० ]

# श्रीहीरविजयसूरिविरहे विजयसेनसूरे-विलापद्वात्रिंशिका ।

ममानिशं यत् त्वमवोच ईश ! सुत ! त्वमास्से मम चेतसीति ।
यथावजाकण्ठकुचोपमां तत् समस्तमुच्चैरभिजात ! तात ! ॥ ४७ ॥
यदर्धनिर्वर्णितमङ्गनानां दिवो दिदृक्षुः प्रसभं प्रसन्नम् ।
भवामि यावत्पदपद्मभृङ्गस्तवात्र तावद् न विलम्बितस्त्वम् ॥४८॥
ममाऽभवद् या भगवंस्त्वदंह्रिसरोजयोः श्रीः पुरतः स्थितस्य ।
त्वदाननन्यस्तविलोचनस्य सुदुर्लभा साऽथ नभोलतेव ॥ ४९ ॥

---

१ तीर्थङ्करलक्ष्मीशोभनशीलताम् । २ घूकसदृशाः । ३ चौरा इव । ४ कुतीर्थिकाः । ५ पृथिव्यां गगने च । ६ रविः । ७ हे कुलीन ! । ८ देवाङ्गनानां कटाक्षोत्क्षेपरूपमर्धावलोकनम् । ९ शोभा । १० गगनवल्लीव ।

विधाय भूमीस्पृशि भालभागेऽञ्जलिं मम [1]प्राञ्जलमञ्जुलस्य ।
भवन्निदेशं सृजतोऽभवद् [2]मुत् क्व साऽथ नाथा[3]ऽमृतमुल्लतेव ? ॥५०॥
पुरातनर्षिव्रजराजराजं विना भवंतं भुवनैकदीपम् ।
कमत्र तातेति भणन्न[4]भीक्ष्णमहं भविष्यामि [5]विनीतविद्यः ? ॥५१॥
रतिर्ममासी[6]र्ममेश ! योच्चैः प्रपश्यतस्त्वन्मुखपुण्डरीकम् ।
अथाब्जिनीवाऽ[7]श्मनि सा भवित्री कथं कथं नाथ! हृदीति मन्ये? ॥५२
[8]करोत्करस्येव रविं भवन्तमभूद् मम श्रीरनुगच्छतो या ।
लतेव सिक्ताऽम्बुधरैः कदा सा पुरा [9]भवत्युन्नतिभाक् प्रकामम् ? ॥५३॥
प्रजाभिधेह्येहि भणेति भव्यैर्वचोभिरासंस्तव या मुदो मे ।
न तद्भवोऽप्यर्थिजनप्रणीतैस्त्वमेधिथा जीव जयेतिवाक्यैः ॥ ५४ ॥
विना तवाज्ञामथ [10]मुक्तिकान्तानिषंगदूतीं निजमूर्ध्नि कस्य ।
निदेशमेणी[11]नयनेनेव पुण्ड्रं श्रियः पदं नित्यमहं निधास्ये ? ॥ ५५ ॥
त्वयि प्रयातेऽस्तमनन्तकान्तौ [12]पयोजिनीभर्तरि भव्य[13]पद्मे ।
ध्रुवं भवित्री भरतावनीयं [14]कुपाक्षिकोल्लूकतमःप्रसारा ॥ ५६ ॥
विना भवंतं [15]गृहरत्नमीश ! सुदीप्तमाधाय कमुत्प्रकाशः ।
[16]शिवाध्वनीनो हृदि धाम्नि भावी जनः समस्तो भरतावनीजः ॥५७॥
सुधर्ममुख्यर्षिमतंगजानां धृता त्वया [17]वामगतेन या धूः ।

१ सरलः । २ हर्षः । ३ कल्पवल्लीव । ४ वारंवारम् । ५ अभ्यस्तविध । ६ हे निर्ममेश ! । ७ दृषदि । ८ किरणपुञ्जस्य । ९ भविष्यतीत्यर्थे । १० मुक्तिवधूसङ्गदूतीम् । ११ कामिनीव । १२ सूर्यः । १३ भव्यानां श्रीर्यस्मात् तस्मिन् । १४ कुपाक्षिका एवोलूकाः । १५ दीपम् । १६ परमपदपथिकः । १७ वामांसस्थेन मनोज्ञगतिना वा ।

कथं मयैकेन च दक्षिणेन धौरेष्यते सा ननु तेणकेन ? ॥ ५८ ॥

अचिंतयित्वेति भेदकृतिं द्राक् त्वमप्सरःकेलिरसानसेवीः ।
न चेद् भवादृग्हितकारिपित्रा विमुच्यते किं पृथुको लघीयान् ? ॥ ५९ ॥

अकब्बरोऽयं नरराजरत्नं भवांश्च सर्वर्षिजनावतंसः ।
मिथश्च योऽभूद् युवयोर्निषंगः सुवर्णमण्योरिव वर्णनीयः ॥ ६० ॥

सं जातवान् दत्तसमस्तसंपद् नृणां कृषीणामिव वारिवाहः ।
प्रकाशभाग् भानुमतेव लोको महस्विना तेन बभूव सर्वः ॥ ६१ ॥

मरुष्विवामर्त्यमहीरुह सं जनेषु चासीत् सततं हिताय ।
कदाऽथ भावी सुखकृत् प्रजानां पयोरुहां दूष्ण इवोदयः स ? ॥ ६२ ॥

शशीव पक्षेण सितेतरेण कलाकलापं कलतो भंतेह ।
सं नाशितस्त्वां हरता विधात्रा जगत्पयोराशिविलासमूलम् ॥ ६३ ॥

विवाहिता श्रीमदकब्बराय वराय तात ! त्वयका द्विजेन ।
कृपाकनी रूपबलर्द्धिबीजं तथा यथार्थाद्भुतमंत्रभाजा ॥ ६४ ॥

यथा युतौ नित्यमिमावभूतां सुदंपती भावरसान् प्रपन्नौ ।
विनाऽस्ति न त्वां स परत्र मंत्रः स्मरन्नदस्तापमुपैम्यहं ही ! ॥ ६५ ॥

—युग्मम्

अकब्बरो बब्बरवंशजन्मा त्वंयीद्धबुद्धिर्भृशमस्ति भूपः ।
सुभक्तिभाजस्त्वयि येऽसुभाजः स तानसून् स्वानिव पाति नित्यम् ॥ ६६ ॥

---

१ वत्सकेन । २ लघीयःस्वरूपाम् । ३ बाल्यः । ४ युवयोः सङ्गः । ५ सङ्गेन । ६ सुरतरुः । ७ सङ्गः । ८ रवेः । ९ युवयोः सङ्गः । १० दीप्तमतिः ११ प्राणिनः ।

अभूद् यदारोह इहास्तिकानां सुदुर्लभः कल्प इवाऽनयानाम्[1] ।
स सिद्धशैलो[2] भगवन्? भवद्वाक्प्रदीपसोद्द्योतहृदा[3] व्यधायि ॥ ६७॥
अकब्बरेणाऽवनिवल्लभेन यदार्हतानां करसाद् नितांतम् ।
सुधांशुतुल्या तव कीर्तिरेषा विशेषविद्भिर्लिखिताऽर्कबिम्बे ॥ ६८॥
—युग्मम् ।
कृपाक्षिकव्यूहवचोऽम्बुवाहात् सपङ्कमासीज्जनचित्ततोयम् ।
विभो ! भवद्वाक्कतकाऽच्छचूर्णप्रयोगतस्तद्[4] विमलं बभूव ॥ ६९ ॥
ततस्तदन्तः सदसच्च वस्तु जिनोदितं तात ! तवाऽनुभावात् ।
उपैति सर्वं प्रतिबिम्बभावं पयोनिधौ बिम्बमिवाऽमृतांशोः ॥ ७० ॥
त्वयि प्रदीपे प्रकटप्रभावे गतेऽस्तमस्तान्ध्यभरप्रसारे ।
अथातिमात्रं कलिकालदोषागमात् तमो भूरि भविष्यतीह ॥ ७१ ॥
मुदं मम त्वन्मुखपुंडरीकं निपीय या दृग्भ्रमरी बभार ।
अनन्यवृत्तिस्तदभावतोऽस्या मरौ मराल्या इव किं रतिः स्यात्? ॥७२॥
चिरं शुचिर्या मम दृक्चकोरद्वयी पपौ त्वद्वदनेन्दुबिम्बम् ।
अथेयमस्याः प्रलयं प्रयाता कथं पिपासा बहुकालजन्मा ? ॥ ७३ ॥
पितस्तवाऽत्यद्भुतसंयमस्य फलं स्फुरद् निर्वृतिरेव[5] वच्मः ।
यदप्सरोभूसुखभूरभूस्त्वं[6] कलेर्वलीयः किल जृम्भितं तत् ॥ ७४ ॥
तपो जपो ब्रह्म च हर्षकृद् मे मुमुक्षुधर्मः[7] सुभग प्रियश्च ।
यदीत्यभाणीर्भगवन्! मुधा तद् विहाय सर्वं यदभूः स्वरिच्छुः ॥७५॥

---

१ दुर्भाग्यानाम् । २ शत्रुञ्जयः । ३ हस्तायत्तः । ४ कतकाख्यफलस्य निर्मलचूर्णस्य । ५ मोक्षः । ६ देवाङ्गनाजातसुखस्थानम् । ७ साधुधर्मः ।

नवो भवच्छोचनदन्दशूको दुरन्तसन्तापविषापहारि ।
तवाभिधानं स्मरतां निहन्ति यदाशु चैतन्यमशेषमेष: ॥ ७६ ॥
त्वया प्रदीपेन तमोहरेण प्रकाशितं यज्जिनशासनौकः ।
न तत्र मिथ्यात्विभुजङ्गचक्षुर्हतिस्तदीयाहतये बभूव ॥ ७७ ॥
यदीयहृद्यस्ति तवाभिधानं मुनीन्द्र ! तेषां त्वमिहासि साक्षात् ।
निरीक्ष्य लेखाक्षरमत्र लोको वैयस्यमायातमिवाऽवगच्छेत् ॥ ७८ ॥
इति क्षरन्नक्षिजलं विलापादेवग्रहादब्द इवाऽम्बुवृष्टेः ।
समस्तसंघाग्रहतो व्यरंसीत् सुधीरनूचानशिरोऽवतंसः ॥ ७९ ॥

—विजयप्रशस्त्याम् स० १४

---

१ शोकाहिः । २ गृहम् । ३ तदुपघाताय । ४ मित्रम् । ५ मेघविघ्नरूपाद् वृष्टिरोधात् ।

[ ४१ ]

# श्रीवीरजिनेश्वरवियोगे

# नन्दिवर्धनस्य विलापः ।

त्वया विना वीर ! कथं व्रजामो ? गृहेऽधुना शून्यवनोपमाने ।
गोष्ठीसुखं केन सहाचरामो ? भोक्ष्यामहे केन सहाऽथ बन्धो ! ॥१॥
सर्वेषु कार्येषु च वीर वीरे–त्यामन्त्रणाद्दर्शनतस्तवार्य ! ।
प्रेमप्रकर्षादभजाम हर्षं, निराश्रयाश्चाऽथ कमाश्रयामः ? ॥ २ ॥
अतिप्रियं बान्धव ! दर्शनं ते, सुधाऽञ्जनं भावि कदाऽस्मदक्ष्णोः ? ।
नीरागचित्तोऽपि कदाचिदस्मान्, स्मरिष्यसि प्रौढगुणाभिराम ! ॥३॥

—कल्पसूत्रसुबोधिकावृत्तौ पृ० ११३

[ ४२ ]

## श्रीमहावीरप्रभुनिर्वाणे गौतमस्य विलापः ।

प्रसरति मिथ्यात्वतमो, गर्जन्ति कुतीर्थिकौशिका[1] अद्य ।
दुर्भिक्षडमरवैरादि-राक्षसाः प्रसरमेष्यन्ति ॥ १ ॥
राहुग्रस्तनिशाकर-मिव गगनं दीपहीनमिव भवनम् ।
भरतमिदं गतशोभं, त्वया विनाऽद्य प्रभो ! जज्ञे ॥ २ ॥
कस्यांह्रिपीठे प्रणतः पदार्थान्, पुनः पुनः प्रश्नपदीकरोमि ?
कं वा भदन्तेति वदामि ? को वा, मां गौतमेत्याप्तगिराऽथ वक्ता ? ॥३॥

हा ! हा ! हा ! वीर ! किं कृतं ? यदीदृशेऽवसरेऽहं दूरीकृतः, किं मांडकं मण्डयित्वा बालवत्तवाञ्चलेऽलगिष्यं ? किं केवलभागममार्गयिष्यं ? किं मुक्तौ सङ्कीर्णं अभविष्यत् ? किं वा तव भारोऽभविष्यत् ? यदेवं मां विमुच्य गतः, एवं च 'वीर ! वीर !' इति कुर्वतो वी- इति मुखे लग्नं गौतमस्य,

—कल्पसूत्रसुबोधिकावृत्तौ पृ० १२७

---

१ उलूकाः । २ अवस्कन्दः ।

[ ४३ ]

# गर्भनिश्चलत्वे त्रिशलाया विलापः ।

ततो—भगवतो निश्चलावस्थानानन्तरं तस्यास्त्रिशलाक्षत्रियाण्या अयमेतद्रूपो यावत् अध्यवसायः समुत्पन्नः, कोऽसौ? इत्याह-हृतो मे-मदीयः स गर्भः किं केनचिद्देवादिना हृतः?, अथवा स मे गर्भः किं मृतः? अथवा स मे गर्भः किं च्युतो? गर्भस्वभावात् परिभ्रष्टः, अथवा स मे गर्भः किं गलितः?-द्रवीभूय क्षरितः, यस्मात्कारणात् एष मे गर्भः पूर्वं एजते-पूर्वं कम्पमानोऽभूत्, इदानीं नैजते-न कंपते इतिकृत्वा-इति हेतोः उपहत—कलुषीभूतो मनःसंकल्पो यस्याः सा तथा चिंता—गर्भहरणादिविकल्पसंभवा अर्तिस्तया यः शोकः स एव सागरः—समुद्रस्तत्र प्रविष्टा—ब्रूडिता, अतएव करतले पर्यस्तं-स्थापितं मुखं यया सा तथा, आर्त्तध्यानोपगता भूमिगतदृष्टिका ध्यायति, अथ सा त्रिशला तदानीं यद् ध्यायति स्म तल्लिख्यते—

सत्यमिदं यदि भविता, मदीयगर्भस्य कथमपीह तदा ।
निष्पुण्यकजीवाना—मवधिरिति ख्यातिमत्यभवम् ॥ १ ॥

यद्वा चिंतारत्नं, न हि नन्दति भाग्यहीनजनसदने ।
नाऽपि च रत्ननिधानं, दरिद्रगृहसंगतीभवति ॥ २ ॥

कल्पतरुर्मरुभूमौ, न प्रादुर्भवति भूम्यभाग्यवशात् ।
न हि निष्पुण्यपिपासितनृणां, पीयूषसामग्री ॥ ३ ॥



हा धिग्! धिग्! दैवं प्रति, किं चक्रे तेन सततवक्रेण?।
यन्मे मनोरथतरु—र्मूलादुन्मूलितोऽनेन ॥ ४ ॥

आत्तं दत्त्वापि च मे लोचनयुगलं कलङ्कविकलमलम् ।
दत्त्वा पुनरुद्दालितमधमेनाऽनेन निधिरत्नम् ॥ ५ ॥
आरोप्य मेरुशिखरं, प्रपातिता पापिनाऽमुनाऽहमियम् ।
परिवेष्याऽप्याऽऽकृष्टं, भोजनभाजनमलज्जेन ॥ ६ ॥
यद्वा मयाऽपराद्धं भवान्तरेऽस्मिन् भवेऽपि किं ? धातः ।
यस्मादेवं कुर्वन्नुचिताऽनुचितं न चिन्तयसि ? ॥ ७ ॥
अथ किं कुर्वे ? क्व च वा, गच्छामि ? वदामि कस्य वा पुरतः ? ।
दुर्दैवेन च दग्धा, मुग्धा जग्धाऽधमेन पुनः ॥ ८ ॥
किं राज्येनाऽप्यमुना ? किं वा कृत्रिमसुखैर्विषयजन्यैः ? ।
किं वा दुकूलशय्याशयनोद्भवशर्महर्म्येण ? ॥ ९ ॥
गजवृषभादिस्वप्नैः, सूचितमुचितं शुचिं त्रिजगदर्च्यम् ।
त्रिभुवनजनासपत्नं, विना जनानन्दिसुतरत्नम् ॥ १० ॥ युग्मम् ॥
धिक् संसारमसारं, धिग्दुःखव्याप्तविषयसुखलेशान् ।
मधुलिप्तखड्गधारा—लेहनतुलितानहो ललितान् ॥ ११ ॥
यद्वा मयका किंचित्तथाविधं दुष्कृतं कृतं कर्म ।
पूर्वभवे यदृषिभिः, प्रोक्तमिदं धर्मशास्त्रेषु ॥ १२ ॥
पसुपक्खिमाणुसाणं, बाले जोऽवि हु विओअए पावो ।
सो अणवच्चो जायइ, अह जायइ तो विवज्जिज्जा ॥१३॥

१ भक्षिताः । २ पशुपक्षिमानुषाणां बालान् योऽपि च वियोजयति पापः ।
सोऽनपत्यो जायते अथ जायते ततो विपद्येत ॥

तत् पङ्कुका मया किं, त्यक्ता वा त्याजिता अधमबुद्धया ? ।
लघुवत्सानां मात्रा, समं वियोगः कृतः किं वा ? ॥ १४ ॥
तेषां दुग्धापायोऽकारि मया कारितोऽथवा लोकैः ।
किं वा सत्रालकोन्दुरु–बिलानि परिपूरितानि जलैः ? ॥ १५ ॥
किं वा साण्डशिशून्यपि, खगनीडानि प्रपातितानि भुवि ।
पिकशुककुर्कुटकादेर्बालवियोगोऽथवा विहितः ॥ १६ ॥
किं वा बालकहत्याऽकारि सपत्नीसुताद्युपरि दुष्टम् ।
चिन्तिमचिन्त्यमपि वा कृतानि किं कार्मणादीनि ? ॥१७॥
किं वा गर्भस्तम्भनशातनपातनमुखं मया चक्रे ? ।
तन्मन्त्रभेषजान्यपि, किं वा मयका प्रयुक्तानि ? ॥१८॥
अथवा भवान्तरे किं ? मया कृतं शीलखण्डनं बहुशः ।
यदिदं दुःखं तस्माद्विना न संभवति जीवानाम् ॥ १९ ॥

यतः—

कुरंडरंडत्तणदुब्भगाइं, वंज्झत्तनिंदूविसकन्नगाइं ।
लहंति जम्मंतरभग्गसीला, नाऊण कुज्जा दढसीलभावं ॥२०॥
एवं चिंताऽऽक्रांता, ध्यायंती म्लानकमलसमवदना ।
दृष्टा शिष्टेन सखी-जनेन, तत्कारणं पृष्टा ॥ २१ ॥
प्रोवाच साश्रुलोचनरचना निःश्वासकलितवचनेन ।
किं मन्दभागधेया, वदामि ? यज्जीवितं मेऽगात् ॥ २२ ॥

---

१ कुरण्डत्वरंडत्वदुर्भगत्वानि वन्ध्यत्वनिंदु (मृतापत्यप्रसूः) विषकन्यकत्वादि ।
लभन्ते जन्मान्तरभग्नशीला ज्ञात्वा कुर्यात् दृढशीलभावं ॥

२ जम्मंतरे खंडिअसीलभावा इति तृतीयपादपाठः पुस्तकान्तरे ।

सख्यो जगुरथ रे सखि !, शान्तममङ्गलमशेषमन्यदिह ।
गर्भस्य तेऽस्ति कुशलं, नवेति वद कोविदे ! सत्यम् ॥ २३ ॥

सा प्रोचे गर्भस्य च, कुशले किमकुशलमस्ति मे सख्यः ! ।
इत्याद्युक्त्वा मूर्च्छामापन्ना पतति भूपीठे ॥ २४ ॥

शीतलवातप्रभृतिभिरुपचारैर्बहुतरैः सखीभीः सा ।
संप्रापितचैतन्योत्तिष्ठति विलपति च पुनरेवम् ॥ २५ ॥

गुरुए अणोरपारे रयणनिहाणे अ सायरे पत्तो ।
छिद्दघडो न भरिज्जइ, ता किं दोसो जलनिहिस्स ? ॥ २६ ॥

पत्ते वसन्तमासे, रिद्धिं पावंति सयलवणराई ।
जं न करीरे पत्तं, ता किं दोसो वसंतस्स ? ॥ २७ ॥

उत्तुंगो सरलतरु, बहुफलभारेण नमिअसव्वंगो ।
कुज्जो फलं न पावइ, ता किं दोसो तरुवरस्स ? ॥ २८ ॥

समीहितं यन्न भलामहे वयं, प्रभो ! न दोषस्तव कर्मणो मम ।
दिवाऽप्युलूको यदि नावलोकते, तदा स दोषः कथमंशुमालिनः ?
॥ २९ ॥

---

१ गुरुकेऽनर्वाक्पारे रत्ननिधाने च सागरे प्राप्तः ।
छिद्रघटो न भ्रियते तर्हि किं दोषो जलनिधेः ? ॥

२ प्राप्ते वसन्तमासे ऋद्धिं प्राप्नोति सकलवनराजी ।
यन्न करीरे पत्रं तर्हि किं दोषो वसन्तस्य ? ॥

३ उत्तुङ्गः सरलतरुर्बहुफलभारेण नतसर्वाङ्गः ।
कुब्जः फलं न प्राप्नोति तर्हि किं दोषस्तरुवरस्य ? ॥

अथ मे मरणं शरणं, किं कारणं विफलजीवितव्येन ? ।
तत् श्रुत्वेति व्यलपत, सख्यादिः सकलपरिवारः ? ॥ ३० ॥
हा ! किमुपस्थितमेतत्, निष्कारणवैरिविधिनियोगेन ।
हा ? कुलदेव्यः क्व गता ? यदुदासीनाः स्थिता यूयम् ॥ ३१ ॥
अथ तत्र प्रत्यूहे, विचक्षणाः कारयंति कुलवृद्धाः ।
शान्तिकपौष्टिकमन्त्रो-पयाचितादीनि कृत्यानि ॥ ३२ ॥
पृच्छन्ति च दैवज्ञान्, निषेधयन्त्यपि च नाटकादीनि ।
अतिगाढशब्दविरचितवचनानि निवारयन्त्यपि च ॥ ३३ ॥
राजाऽपि लोककलितः, शोकाकुलितोऽजनिष्ट शिष्टमतिः ।
किं कर्त्तव्यविमूढाः, संजाता मन्त्रिणः सर्वे ॥ ३४ ॥

—कल्पसूत्रसुबोधिकावृत्तौ पृ० ८२-८४

[ ४४ ]

## श्रीरत्नाकरसूरेर्वैराग्यगर्भिताऽनुशयपञ्चविंशतिका।

श्रेयः श्रियां मङ्गलकेलिसद्म !, नरेन्द्रदेवेन्द्रनताङ्घ्रिपद्म ! ।
सर्वज्ञ ! सर्वातिशयप्रधान !, चिरं जय ज्ञानकलानिधान ! ॥ १ ॥
जगत्त्रयाधार ! कृपावतार !, दुर्वारसंसारविकारवैद्य ! ।
श्रीवीतराग! त्वयि मुग्धभावाद्विज्ञ! प्रभो! विज्ञपयामि किंचित् ॥२॥
किं बाललीला कलितो न बालः, पित्रोः पुरो जल्पति निर्विकल्पः? ।
तथा यथार्थं कथयामि नाथ!, निजाशयं सानुशयस्तवाग्रे ॥ ३ ॥
दत्तं न दानं परिशीलितं च, न शालि शीलं न तपोऽभितप्तम् ।
शुभो न भावोऽप्यभवद्भवेऽस्मिन्, विभो ! मया भ्रांतमहो मुधैव ॥४॥
दग्धोऽग्निना क्रोधमयेन दष्टो, दुष्टेन लोभाख्यमहोरगेण ।
ग्रस्तोऽभिमानाजगरेण मायाजालेन बद्धोऽस्मि कथं भजे त्वाम् ॥५॥
कृतं मयाऽमूत्र हितं न चेह-लोकेऽपि लोकेश ! सुखं न मेऽभूत् ।
अस्मादृशां केवलमेव जन्म, जिनेश! जज्ञे भवपूरणाय ॥ ६ ॥
मन्ये मनो यन्न मनोज्ञवृत्तं त्वदास्यपीयूषमयूखलाभात् ।
द्रुतं महानंदरसं कठोरमस्मादृशां देव ! तदश्मतोऽपि ॥ ७ ॥
त्वत्तः सुदुष्प्राप्यमिदं मयाप्तं रत्नत्रयं भूरिभवभ्रमेण ।
प्रमादनिद्रावशतो गतं तत्, कस्याग्रतो नायक ! पुत्करोमि ॥ ८ ॥
वैराग्यरंगः परवंचनाय, धर्मोपदेशो जनरंजनाय ।
वादाय विद्याऽध्ययनं च मेऽभूत्, कियद् ब्रुवे हास्यकरं स्वमीश ! ॥९॥

---

१ स्वाभिप्रायम् । २ पश्चात्तापसहितः । ३ मनोहरम् । ४ महासर्पेण ।

परापवादेन मुखं सदोषं, नेत्रं परस्त्रीजनवीक्षणेन ।
चेतः परापायविचिंतनेन, कृतं भविष्यामि कथं विभोऽहम् ॥ १० ॥
विडंबितं यत्स्मरघस्मरार्ति–दशावशात्स्वं, विषयांधलेन ।
प्रकाशितं तद्भवतो ह्रियैव, सर्वज्ञ ! सर्वं स्वयमेव वेत्सि ॥ ११ ॥
ध्वस्तोऽन्यमन्त्रैः परमेष्ठिमन्त्रः कुशास्त्रवाक्यैर्निहतागमोक्तिः ।
कर्त्तुं वृथा कर्म कुदेवसंगादवांछि हि नाथ ! मतिभ्रमो मे ॥१२॥
विमुच्य दृग्लक्ष्यगतं भवन्तं, ध्याता मया मूढधिया हृदंतः ।
कटाक्षवक्षोजगभीरनाभिकटीतटीयाः सुदृशां विलासाः ॥ १३ ॥
लोलेक्षणावक्त्रनिरीक्षणेन, यो मानसे रागलवो विलग्नः ।
न शुद्धसिद्धान्तपयोधिमध्ये, धौतोऽप्यगात्तारक ! कारणं किम् ॥१४॥
अङ्गं न चङ्गं न गणो गुणानां, न निर्मलः कोऽपि कलाविलासः ।
स्फुरत्प्रभा न प्रभुता च काऽपि, तथाऽप्यहंकारकदर्थितोऽहम् ॥१५॥
आयुर्गलत्याशु न पापबुद्धिर्गतं वयो नो विषयाभिलाषः ।
यत्नश्च भैषज्यविधौ न धर्मे, स्वामिन्महामोहविडम्बना मे ॥१६॥
नाऽत्मा न पुण्यं न भवो न पापं, मया विटानां कटुगीरपीयम् ।
अधारि कर्णे त्वयि केवलार्के, परिस्फुटे सत्यपि देव ! धिग् माम् ॥१७॥
न देवपूजा न च पात्रपूजा न श्राद्धधर्मश्च न साधुधर्मः ।
लब्ध्वाऽपि मानुष्यमिदं समस्तं, कृतं मयाऽरण्यविलापतुल्यम् ॥१८॥
चक्रे मयाऽसत्स्वपि कामधेनुकल्पद्रुचिन्तामणिषु स्पृहार्तिः ।
न जैनधर्मे स्फुटशर्मदेऽपि, जिनेश ! मे पश्य विमूढभावम् ॥१९॥

१ अनर्थस्य । २ निजस्वरूपम् ।

सद्भोगलीला न च [1]रोगकीला, धनागमो नो [2]निधनागमश्च ।
दारा न कारा नरकस्य चित्ते, व्यचिन्ति नित्यं मयकाऽधमेन ॥२०॥

स्थितं न साधोर्हृदि साधुवृत्तात्, परोपकारान्न यशोऽर्जितं च ।
कृतं न तीर्थोद्धरणादिकृत्यं, मया मुधा हारितमेव जन्म ॥ २१ ॥

वैराग्यरङ्गो न गुरूदितेषु, न दुर्जनानां वचनेषु शान्तिः ।
नाऽध्यात्मलेशो मम कोऽपि देव! तार्यः कथङ्कारमयं भवाब्धिः ॥२२॥

पूर्वे भवेऽकारि मया न पुण्यमागामिजन्मन्यपि नो करिष्ये ।
यदीदृशोऽहं मम तेन नष्टा, भूतोद्भवद्भाविभवत्रयीश ! ॥ २३ ॥

किं वा मुधाऽहं बहुधा सुधाभुक्पूज्य ! त्वदग्रे चरितं स्वकीयं ।
जल्पामि यस्मात् त्रिजगत्स्वरूपनिरूपकस्त्वं कियदेतदत्र ॥ २४ ॥

दीनोद्धारधुरंधरस्त्वदपरो, नास्ते मदन्यः कृपा—
पात्रं नात्रजने जिनेश्वर ! तथाप्येतां न याचे श्रियम ।
किं त्वर्हन्निदमेव केवलमहो सद्बोधिरत्नं शिवं,
श्रीरत्नाकर ! मंगलैकनिलय ! श्रेयस्करं प्रार्थये ॥ २५ ॥

—श्रीरत्नाकरपञ्चविंशतिका

इतिश्री करुणारसकदम्बके संस्कृतः
प्रथमखण्डः समाप्तः ।

---

१ रोगा एव कीलकाः । २ मृत्योः । ३ कारागाराणि । ४ देवाः । ५ इह लोके । ६ द्रव्यसम्पदम् ।

# श्रीनेमिविज्ञानग्रन्थमाला

| | | |
|---|---|---|
| १ | श्रीप्राकृतविज्ञानपाठमाला | रू० २–४–० |
| २ | स्तंभनपार्श्वनाथमाहात्म्य | भेट |
| ३ | आरामसोहाकहा | भेट |
| ४ | धणवालकहा | भेट |
| ५–६ | करुणरसकदंबक | रू० १–८–० |